ஸம்ஸ்க்ருதஶ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

SAMSKṚTAŚRI

ஸம்ஸ்க்ருதஶ்ரீ



A Fortnightly Bulletin of the Samskrit Education Society, Madras.



Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mall Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—9

वागीश्वर्यै नमः

हंसारूढा हरभसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुरेखा ।
विद्या वीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥

[முதலை தன்னிருப்பிடத்தில் (ஆழமான நீர் நிலையில்) இருப்பின் மாபெரும் யானையையும் இழுத்துவிடுகிறது. அதுவே தன்னிடம் விட்டகன்றால் (தரையையடைந்தால்) நாயினால்கூட அவமதிக்கப் பெறுகின்றது.]

—மஹாபாரதம்.



श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5082-रौद्र-कुंभ-11 (4-9) 22—2—81

सन्तु विद्या जगत्यस्मिन् संसारभ्रमहेतवः ।
भजेऽहं तां यया विद्वान् विद्ययाऽमृतमश्नुते ॥

—त्रिपुरसुन्दरीवेदपादस्तवे श्रीशङ्करभगवत्पादाः

## चरैव चरैव (५)

"चरैव चरैव" 'नान्यः पन्था अयनाय विद्यते' इत्युपदिदेश भगवान् इन्द्रः करुणया । पिता कौमारे रक्षति माता शैशवे । पिता कुमारं रोहितमरक्षद्वरुणात्, यावता न स स्वयं बाधितः । यदा वाचा कालं यापयन्तं अप्रतिश्रुतकारिणं राजानं मृत्युरूपेणोदररोगेण वरुणो निजग्राह, मृत्योर्भीतः स पुत्रं बलित्वेनार्पयितुं सज्जो बभूव । मातापितरौ हि वात्सल्येन शिशुं सर्वतो गोपायन्तौ देवत्वमर्हतः । तावेव घातकावात्मनोऽर्थे इति ताभ्यामपाक्रामत् रोहितः । अरक्षितं तिष्ठति दैवरक्षितम् । अस्य दैवमेव घातुकं वरुणरूपेणात्मनो बलित्वेनोपहरणीयतां प्रतीक्षमाणम् । इन्द्रस्त्राता "चरैव चरैव, निर्विण्ण आत्मानं मा त्यज" इत्युपदिशन् । इन्द्रस्य रोहितमनुचरणं, रोहितस्य च वने यावत् शुनश्शेपलाभं चरणं मृत्युमोचने उपाकरोत् ।

वेदेषु केनचिदसुरेणापहृतेषु प्रलयपयोधिजले गोपितेषु, भगवान् नारायणो रक्षणेऽधिकृतः वेदाहरणाय मत्स्यो बभूव, तमन्वचरदाविशेषः सर्पात्मनैव । न तत्र सर्पमत्स्ययोरभ्यवहर्त्रभ्यवहार्यते, स्वभावात् । सांगान्वेदानाहरतो नारायणादयं आयुर्वेदमधिजगे उपवेदम् । एकदा

भगवति नारायणे कुतश्चिद् गते, शेषः महीं सर्वतो भ्रमन् चर इव गुप्तश्चचार । लोका गदैर्ग्रस्ता व्यथिता म्रियमाणास्तेन दृष्टाः । दययाप्लुतः भगवतोऽधीतेनायुर्वेदेन लोकान् गदेभ्य उद्दिधीर्षुः कस्यचिन्मुनेः पुत्रतामियाय, आयुर्वेदमुपदिदेश लोकाय । "यतश्चर इवायातो न ज्ञातः केनचिद्यतः । तस्माच्चरकनाम्नासौ विख्यातः क्षितिमण्डले । स भाति चरकाचार्यो लोकाचार्यो यथा भुवि ।" स एव कदाचित् योगशास्त्रे सूत्ररचनेन, व्याकरणे पाणिनिसूत्राणां भाष्यरचनेन च मनसो वाचां च मलमपाकरोत् । यं स्तौति विज्ञानभिक्षुः योगवार्तिकारंभे "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इति । चर इव चरन्नसौ निजगाद "कृत्स्नो हि लोको बुद्धिमतामाचार्यः, शत्रुश्चाबुद्धिमताम्" इति स्वीयायां चरकसंहितायाम् । उपदेशवाक्यरत्नमालामध्यमणिभूतोऽयमुपदेशः । (अनुवर्ति)

# अयि ! सुजनेतर !

[हिमगिरिपर्यन्तगं कुमायूङ् प्रदेशं आत्मनो जन्मदेशं प्रख्यापयन्नयं गुमानी नाम महाकविः कश्चन । तस्य दुर्जनदूषणं नाम द्वाचत्वारिंशत्पद्यात्मकः काव्यखण्ड उपलब्धो रुचिरः । सरलया लघुपदबद्धया सरसया च शैल्या प्रस्तौति दुर्जनप्रभावमत्र । ऊह्यते, कवेरस्यान्येऽपि निबन्धाः प्रकाशिताः स्युरिति । दुर्जनं सुजनेतर ! इति संबोधयन्नयं कविः शोच्यं तं कुपथान्निवर्तयितुकाम इव सान्त्वेनोपगच्छति प्रथमम् । तत्र कांश्चिच्छ्लोकानुपहरामः ।]

अयि सुजनेतर ! वक्तुं किमपि भवन्तं वचोऽधुना तथ्यम् ।
मानसमुत्सहते मे विजित्य कोपं तदाकलय ॥
हर्तुं वयो जनन्याः कर्तुमवन्याः सुदुर्भरं भारम् ।

क्लेशयितुमार्यलोकान् दुर्जन ते केवलं जन्म ॥

यद्गर्भ एव तस्या न मृतो, जातोऽपि नाहिना दष्टः ।
जीवसि सुखं दुरात्मन् दौर्भाग्यं तत्सतामेव ॥

परुषैर्वचोभिरुग्रैः पुरुषान्महतस्तुदन् अधिक्षिपसि ।
ननु वद विश्वजनीनैः किं तव कितवापराद्धं तैः ॥

वन्द्यान् गुणैरनिन्द्यान् महानुभावान् मुहुर्मुहुस्तुदतः ।
दुर्मुख तव कथमेका शतधा न विदीर्यते जिह्वा ॥

आपाततः समक्षं मधुराकारोऽन्तरालतः क्रूरः ।
बुध्यन् ननु हतबुद्धे त्वमसिरसि क्षौद्रदिग्ध इव ॥

कर्तुं प्रहर्षवर्षं सतामनर्षप्रकर्षमितरेषाम् ।
निरमास्कविर्गुमानी भुवि दुर्जनदूषणं नाम ॥

# जगद्गुरुः (२)

मुल्लैवासल् रा. कृष्णमूर्तिशास्त्री, एम्. ए. संस्कृतकालेज्,
मैलापूर्, मद्रास्–४

६ शिशुः—अर्भकः स्वयं तुष्टः परानपि तोषयति । तस्य बाह्यैः सुखदुःखैः न पीडा जायते । सर्वदा निश्चिन्तः, आत्मनि परितुष्टः क्रीडति । पदार्थेषु रागद्वेषौ तस्य न भवतः । कोपः तस्य नैव प्रादुर्भवति । परैः निन्दायां कृतायामपि न रुष्टः । ताडितोऽपि हसति । अस्य सर्वस्य कारणं इदं—" मनः निष्कल्मषं अप्रकृष्टं च " । तस्मात् अस्माभिः बालगुरोः सकाशात् मनसः निष्कल्मषत्वं शिक्षणीयम् । अत एव बृहदारण्यकोपनिषदि तत्त्वज्ञानोपायतया " बाल्येन तिष्ठासेत् " —इत्यत्र ' बालसदृशं शुद्धं मनः संपादनीयं ' इत्युक्तम् ।

७ इषुकारः— व्याधादयः इषुकाराः लक्ष्यं सूक्ष्ममपि विध्यन्ति । अस्माकं तु तद्दुष्करं प्रतिभाति । कारणं तु अनभ्यासः

एव। यदि अभ्यासपाटवेन मनः एकत्र लक्ष्ये संलग्नं भवेत्, तर्हि किमपि न दुष्करम्। लक्ष्ये मनसः संलग्नता एकाग्रतायाः अभ्यासेन संपाद्यते। बहुवारं आक्षिप्तचित्तेनापि सता, बहुवाराभ्यासेन खलु मनसः स्थैर्यं सम्पाद्यते व्याधादिना। अतः इषुकारः अस्मानुपदिशति—(१) मनसः एकाग्रतया सर्वं लक्ष्यं सुप्रापमेव। (२) सुदृढः अभ्यासः तस्य उपायः—इति।

८ समुद्रः—अयं अस्माकं जीविकायां तादृशं स्वभावं सम्पादनीयं उपदिशति येन वयं तितिक्षवः अथवा सहिष्णवः शान्ताश्च भवेम। अयं सर्वदा संपूर्णः (तृप्तः) वर्तते। वर्षासु जलप्रवाहपातात् न वर्धते। घर्मे काले जलशोषणेन च नैव शुष्यति। किंच सदा गम्भीरो विराजते। अतः समुद्रात् अस्माभिः इदं ज्ञातव्यं—(१) सुखे दुःखे च एकरूपैः भवितव्यम्। (२) सर्वं सोढ्वा गम्भीरैः अक्षुब्धैश्च वर्तितव्यम्।

तथा चोक्तम्—

"समृद्धकामो हीनो वा नारायणपरो मुनिः।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः॥

९ वायुः—अस्माकं बहूनि दुःखानि विषयेषु आसक्त्या जायन्ते। विषयाः चञ्चलाः, अस्थिराश्च धनादयः। तत्र यदि वयमतीव आसक्ताः स्याम तदा तेषां अलाभे, वियोगे, ह्रासे, वैगुण्ये च अस्माकं अतीव पीडा उत्पद्यते। अत एव वयं चिन्ताचक्रे पतामः। जीवनदशायां सर्वान् वैषयिकान् भोगान् यदा प्राप्नुमः, तदा अनतिसक्तैः भाव्यम्। असक्तिरियं अस्मान् दुःखेभ्यः प्रतिरक्षति। वायुरूपः गुरुः इमां असक्तिमेव अस्मभ्यं उपदिशति। स हि सर्वत्रगो वर्तते। सर्वसञ्चारी सन्नपि गुणदोषाभ्यां न संबध्यते। अतः साधूक्तम्—

"विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत्॥ इति॥

# महान्तस्ते (१)

## काव्यकण्ठ गणपतिशास्त्री

वासिष्ठो गणपतिमुनिः काव्यकण्ठपदलाञ्छनः। अयं पित्रोस्त्रिषु सुतेषु मध्यमः। आन्ध्रेषु बोब्बिलिसंस्थानगः कुमुदोपल (कलवरायि) ग्रामोऽस्य जन्मभूमिः। वंशजाः पूर्वे कुंभघोणनगरोपान्तस्थवलंगैमान्ग्रामस्थाः। ऋग्वेदिनः कौण्डिन्यगोत्रजाः। अय्यलसोमयाजीति कुलोपाधिरेषाम्। आन्ध्रदेशमागतानां तेषां वत्सरद्विशती गता। अस्य पिता नरसिंहशास्त्री अस्य जन्मनः प्राक् काशीमगमत्। विघ्नेश्वरसन्निधौ भक्तिभरनमितस्य तस्य पुरतः कश्चन शिशुः खेलन्नास्त, एनं दृष्ट्वा तदुपकण्ठमाधावत्। क्षणात् स कुत्रापि गतः। काश्या निवृत्तस्य जातः शिशुः गणपतिनाम्ना संस्कृतः। (जननतिथिः १८-११-१८७८) पूर्वे वंशजा अस्य आयुर्वेदे दैवज्ञतन्त्रे तन्त्रशास्त्रे च प्रतिष्ठितव्यक्तयः। श्रीविद्या कुलधनम्। सर्वमेतत् शिशुं प्राप प्राक्तनैः संस्कारैः सह। दशमे वर्षे पञ्चांगं स्वयं स समकलयत्। द्वादशे भृंगसन्देशं नाम खण्डकाव्यमरचयत्। वयोऽनुरूपं कवितायां मौग्ध्यं औद्धत्यं रामणीयकं च समरसतामापन्नं ददृशे।

"इह केषाञ्चिदेषा चेन्न सन्तोषाय का क्षतिः।
किमानन्दाय काकानां बालकोकिलकाकली॥

पद्यमिदं तस्य तदातनं स्वरूपं निदर्शयति।

श्रीमद्रामायणमहाभारतादिषु नितरां रत एष बाल्य एव कृतोद्वाहः, तपसि कृतनिश्चयः, तीर्थयात्राव्याजेनेतस्ततोऽटन् श्रीविद्यादिमन्त्रसिद्धये दिव्यक्षेत्रवासमंग्यकरोत्। मध्ये "गौडेषु विश्रुते नवद्वीपनगरे पाण्डित्यपरीक्षार्थं प्रचलिष्यति पण्डितपरिषत्" इति श्रुतमनेन। काश्यां लब्धप्रतिष्ठाः शिवकुमारपण्डिता अस्य तत्र गमनं परीक्षिष्यमाणवर्णप्रवेशं चाभ्यमन्यन्त। ततो लब्धपरिचयपत्रः एकविंशद्वर्षवयाः नवद्वीपं

गतवान्, परिषन्निर्वाहकैर्लब्धपरिचयः, परीक्ष्यमाणगोष्ठीं प्रविवेश। तरुणं कृशं भुवनमेव दृष्ट्या तृणीकुर्वन्तमेनं परीक्षकः अंबिकादत्तो नाम आशुकविः विपश्चिदग्रगण्यः परीक्षितुमारभमाणः स्वस्य परिचयदानव्याजेन इत्थं पद्यार्धं प्रस्तुतवान्—

" सत्वरकवितासविता गौडोऽहं कश्चिदंबिकादत्तः। "

सद्य एव प्रत्युत्तरं उदगमत् वासिष्ठमुखात्—

" गणपतिरिति कविकुलपतिरतिदक्षो दाक्षिणात्योऽहम् ॥ "

पद्यपूरणसमनन्तरमेव व्यंग्यगर्भितया, " भवान् दत्तः, अहमौरसः " इति मधुरया गिरा सदः चमत्चकार। " गौडोऽहं कश्चित् " " कविकुलपतिरतिदक्षः " भवान् दत्तपुत्रः, अहं गणपतिः किल, औरसः पुत्रः " इति श्लोकपरिपूरणपरिपाट्या आरंभ एव सदः समावर्जयत्।

पद्यपूरणसमस्या प्रारब्धा —

दत्तं—स्तनवस्त्रं परित्यज्य वधूः श्वशुरमिच्छति।

पूरितं—हिडिम्बा भीमदयिता निदाघे घर्मपीडिता।

पूर्वार्धे स्फुरितं चरितावद्यं पूरणेन परिहृतम्।

दत्तं—वत्सरस्यैकदा गौरी पतिवक्त्रं न पश्यति।

पूरितं—चतुर्थ्यां भाद्रशुक्लस्य चन्द्रदर्शनशंकया।

इदानीं समस्या ज्योतिषविषयिणी—

दत्तं—' सूर्यः शशांकेन समं विनष्टः '।

पूरितमेवं—

राहुस्त्रिकोणे च गुरुस्तृतीये कलत्रभावे च धरातनूजः।
लग्ने च कोष्ठे यदि बालकः स्यात्सूर्यः शशांकेन समं विनष्टः ॥

चतुर्थ्यां समस्यायां अन्त्यः पादो दत्तः " पिपीलिका चुंबति चन्द्रमण्डलम् " इति। पूरितश्चायं श्लोक एवं—

सतीवियोगेन विषण्णचेतसः प्रभोः शयानस्य हिमालये गिरौ।
शिवस्य चूडाकलितं सुधाशया पिपीलिका चुंबति चन्द्रमण्डलम् ॥

"ஏங்காமுகில் பொழியா நாளும்
புனல் தேங்கும் காவிரி" —முத்தொள்ளாயிரம்.



மேலே ஏற நீ யாரடா! சீ! எங்கேனும் தரையில் உட்கார். அசடே! ஸுநீதியின் வயிற்றில் பிறந்த உனக்கு ரத்னத்தாலான ஆஸனத்தில் அமருகை எதற்காக? 47

अधिरुरुक्षसि राजनि दुर्भगाजठरजात कथं न दुराशय।
अतुलमौक्तिकहारसमं नृपे न खलु काचमणेरुचिता स्थितिः॥

பாக்கியமற்றவளின் வயிற்றில் பிறந்தவனே! துஷ்டனே! அரசர் மடிமீது ஏன் அமர விரும்புகிறாய்! அரசரின்மீது இணையற்ற முத்து மாலையைப்போல் கண்ணாடிமணி இருப்பது உசிதமா? 48

क्षितिपतिं यदि वीक्षितुमागतः क्वचन वीक्ष्य निषीद नु कोणतः।
अनवबुध्य निजां जडयोग्यतां स्पृहयसे किमु भूपतिविष्टरम्॥

அரசரைக் காணவந்தவனாயின், அவரைப் பார்த்துவிட்டு எங்கேனும் மூலையில் அமர்ந்துவிடு. அசடே! தனது தகுதியை அறியாமல் அரசனின் ஆசனத்தை ஏன் விரும்புகிறாய்? 49

विलसदीदृशरत्नमयासनस्थितमहीपतिजान्वधिरोहणे।
यदि तथा सुकृतान्यकरिष्यथा नहि सुनीतितनोरजनिष्यथाः॥

நன்கு விளங்கும் இத்தகைய ரத்தினத்தாலான ஆஸனத்தில் அமர்ந்த அரசரின் முழங்காலில் ஏற நீ அப்படி நல்வினைகளைப் புரிந்திருந்தாயேயானால் ஸுநீதியின் உடலிலிருந்து பிறந்திருக்க மாட்டாய். 50

सुकृतहीनसुनीत्युदरादसावुदितवानिति ते न कुतो मतिः॥
भवतु बालिश यद्यतसे कथं मदुदितोऽपि नृपासनरोहणे॥

நல்வினை புரியாத ஸுநீதியின் வயிற்றில் தோன்றியவன் என்ற எண்ணம் ஏன் உனக்கில்லை? இருக்கட்டும்! சிறுபிள்ளைத்தனமுள்ளவனே! நான் சொல்லியும் அரசனின் ஆசனத்தில் ஏற ஏன் முயலுகிறாய்? 51

सुचरितैर्बहुभिरसुलभं परं स्वमधिरोहसि वा क्षितिपाङ्कम्।
सुकृतिनीजठराज्जनितो यतस्तदगमन्नृपतौ पदमुत्तमः॥

பல நல்வினைகளால்மட்டும் எளிதில் கிட்டக்கூடிய அரசனின் மடியில் நீ ஏறுவதா? நல்வினை பல புரிந்தவளின் வயிற்றில் பிறந்தவனதால் உத்தமன் அதனை அடைந்துள்ளான். 52

तव च भाग्यममूदृशमस्ति चेदुदरतस्सुरुचेर्ध्रुवदप्ययथाः ।
अजनितः सुरुचेर्जठरादहो पदमिदं लपसे किमु दुर्मते ॥

அவனுக்கிருந்ததுபோல் பாக்கியம் உனக்கும் இருக்குமேயாகில் ஸுருசியின் வயிற்றில் பிறந்திருப்பாய். மதிகெட்டவனே! ஸுருசியின் வயிற்றில் பிறக்காத நீ அந்த இடத்தை விரும்புகிருயா? 53

क्षितिभृदूरुनिषण्णममुं सुतं मम विलोक्य विधेयमरे किमु ।
शिवशिरस्यमृतांशुशिशोः समं निविशतां नु करीषकमण्डली ॥

அரசனின் மடிமீது அமர்ந்த இந்த என் பிள்ளையைப் பார்த்து (அஸூயைப்பட்டு) என்னசெய்வது? இளஞ் சந்திரனுக்கொப்பான சிவனின் தலையில் சாணியாலான வராட்டி உட்காருவதா? 54

बत भजन्नपि राजकुमारतां मदुदरे नु भवेर्यदि धन्यता ।
नृपतिजानुनिविष्टपदांबुजो ज्वलति मत्तनुजः किल पश्य रे ॥

அரசனின் மகனுயிருக்கும் தன்மையைப் பெற்றிருந்தாலும் என் வயிற்றில் தோன்றியிருந்தாயேயானுல் கொடுத்துவைத்தவனுயிருந் திருப்பாய். அரசனின் முழங்காலில் கால்வைத்தமர்ந்த என் பிள்ளை எப்படி ஜொலிக்கிருன், பாரடா? 55

जनिमतो भुवने किल कस्य वा भवति नोन्नतये स्पृहयालुता ।
लषति यो यदिदं लभते स किं सुचरितैर्हि मनोरथसिद्धयः ॥

உலகில் பிறந்தவன் எவனுக்குத்தான் மேம்பாட்டை அடைய விருப்பம் இருக்காது? ஆனுல் விரும்பியதை அவன் அடைகிருனு என்ன? நல்வினைகளாலல்லவா மனோரதம் நிறைவேறும்? 56

ध्रुवमनर्हपदेष्वभिलाषुकः प्रबलगर्हणयैव निवर्तते ।
सुलभदुर्लभबुद्धिविनाकृतः त्वमपि दुर्लषितस्य फलं भज ॥

தனக்குத்தகாத பதவியை விரும்புபவன் பெருத்த அவமானத் துடன் தான் திரும்புவான். இது எளிது, இது எளிதல்ல என்று அறிவற்றவனுன நீயும் கெட்ட ஆசையின் பலனை அனுபவி. 57

चपलतां प्रविहाय पुरैव किं न्यविशथाः स्थल एव तवोचिते ।
उपरि हन्त किमर्थमगा इमामधमतिं च किमर्थमशिश्रियः ॥

गुणविशेषवशान्नृपतेर्ध्रुवे हृदि मनागिव सन् प्रणयोऽप्यगात् ।
सुरुचिसन्निहितस्य सुदूरतः तुहिनबिन्दुरिवारुणसन्निधौ ॥

ஸுருசியின் நெருக்கமுள்ள அவ்வரசனுக்கு ஏற்பட்ட குண மாறுதல் காரணமாக துருவனிடத்தில் சிறிதளவு கொண்டிருந்த பிரியமும் மறைந்தது, காலையில் தோன்றும் சிவந்த சூரியனின் முன்னிலையில் பனித்துளிபோல், 37

नृपतिमीदृशमप्ययमर्भकः प्रणिपपात विनीतियुतस्तथा ।
निजविभूषणकर्षणजो रवो भुवि निवेदयते नृपतिं यथा ॥

இத்தகைய அரசனையும் இந்தக் குழந்தை அடக்கமுள்ளவனுக (வணங்கும்போது) தன் ஆபரணங்கள் பூமியில் உரைவதால் ஏற்படும் ஒலி அரசனுக்குத் (தன் வணக்கத்தைத்) தெரிவிக்குமளவில் வணங்கினான். 38

तरलितस्वहृदुत्तमदर्शनात्पितरमाश्रयितुं प्रणतोत्थितः ।
न सहते स विलंबमसौ क्षणं परविशेषसहा नहि बालता ॥

உத்தமனைக் கண்டதால் சபலத்திற்குள்ளான மனமுள்ள இவன் வணங்கி எழுந்தவனாகத்தகப்பனை அடைவதில் தாமதத்தைச் சிறிதுகூடப் பொறுக்கவில்லை. பிறரது உயர்வைசிச்சிசுமனம் தாங்காதல்லவா? 39

स्वपितुरंकतलं स्वयमादरादधिरुरुक्षति तत्र च पुत्रके ।
समरुरुत्सत तं सुरुचिर्हठादधिकठोरहृदः खलु योषितः ॥

தனது தந்தையின் மடியைத் தானே அன்புடன் அந்த குமாரன் ஏற விரும்புகையில் அவனை ஸுருசி தடுத்தாள். பெண்கள் பிடிவாதத்தால் அதிக குரூரமான மனப்பான்மை கொண்டவர்களாகிறார்கள் அல்லவா? 40

सुरुचिदुर्हृदयेऽवगतेऽप्यसावगणयन् तदलक्ष्यतया ध्रुवः ।
पितरमेतुमचेष्टत कौतुकान्न हि समे पथि सा प्रकृतिस्त्रसेत् ॥

ஸுருசியின் கெட்ட எண்ணம் அறியப்பட்டபின்னரும் துருவன் அதனைப் பொருட்படுத்தாமல் தகப்பனை அடைவதற்குக் குதூகலத்துடன் இயங்கினான். அந்த பாலத் தன்மை ஸமமான பாதையில் பயம் கொள்ளாதல்லவா? 41

निजसुतेन समां स्थितिमीषदप्यसहमानमतिदुरसूयया ।
बत सुनीतिसुतं सुरुचिस्तदा गिरमिमामवदद्भृशकर्कशा ॥

கெட்ட அஸூயையால் தன் பிள்ளையுடன் கூடான நிலையைச் சிறிதும் பொறுக்காத மனமுள்ளவளாக ஸுருசி ஸுநீதியின் பிள்ளையைப் பார்த்தாள். அப்போது மிகவும் மென்மையற்றவளாகப் பேசினாள். 42

समधिरोहसि कुत्र न शक्यते मम सुतेन समं भवितुं त्वया ।
क्व पुनरुत्तम एष ममात्मजः क्व च सुनीतिसुतस्त्वमरेऽधमः ॥

"ஏய்! எங்கு ஏறுகிறாய்? என் பிள்ளையுடன் சமமாக உன்னால் ஆகாது. என் பிள்ளை உத்தமன் எங்கே? ஸுநீதி பிள்ளை அதமனான நீ எங்கே? 43

इति तया गदितोऽपि स निर्भयं मम पितुर्निकटं प्रतियाम्यहम् ।
त्वमिह पृच्छसि किंत्विति तामसावभिदधावतिधीरतरं ध्रुवः ॥

இப்படி அவள் கூறினபோதும் அந்த துருவன் பயமின்றி "என் தந்தையின் அருகே நான் செல்கிறேன். நீ எதற்கு இங்கு கேட்கிறாய்?" என மிகவும் தைரியத்துடன் அவளிடம் கூறினான். 44

धुरि पितुः किमियं तनितेत्ययं मनसिकृत्य पितुर्बलमात्मनः ।
प्रतिवदन्निति तामुपरि ध्रुवस्त्वरितमेव पदैकमुपादधे ॥

"தந்தையின் எதிரில் இவள் என்ன செய்யக்கூடும்" என்று தனது தந்தையின் பலத்தை மனத்திற்கொண்டு இவ்வாறு அவளுக்குப் பதிலளித்த துருவன் விரைவாக ஓரடி முன்வைத்தான். 45

मदुदितं निशमय्य च निर्भयः किमधिरोहसि दुर्भग सत्वरम् ।
इति हठेन विकृष्य करेण तं पुनररुन्तुदमेनमुवाच सा ॥

"பாக்கியமற்றவனே! நான் சொன்னதைக் கேட்டும் பயமின்றி வேகமாக ஏன் ஏறுகிறாய்" என அடத்தால் அவனைக் கையால் இழுத்துப் பின்னும் மனத்தைக் குத்தும்படி அவள் பேசினாள். 46

उपरि गन्तुमरे कतमो भवान् धिगित एव निषीद भुवि क्वचित् ।
जड सुनीत्युदरे जनितस्य किं तव च रत्नमये स्थितिरासने ॥

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

पाठमाला अनुबन्धः ७७ பாடமாலா தொடர் 77

## सप्तनवतितमः पाठः—பாடம் 97 (தொடர்ச்சி)

## ஸமாஸங்கள்—தத்புருஷஸமாஸம்

பயிற்சி : தமிழில் மொழி பெயர்த்து எழுதுக.

अद्यत्वे काङ्ग्रेसाश्रिताः राज्यं पालयन्ति । अन्यकक्ष्याश्रिता विपक्षे वर्तन्ते ।

भिषक् रोगिणे सूचिकावेधं ददाति, तदा क्षणदुःखं भवति ।

वयोतीताः अधिकारिणः रेल्वेनिर्वाहात् निर्गमिताः ।

रामायणं वाल्मीकिविरचितं आदिकाव्यम् ।

न हि रामसमः कश्चित् वर्तते त्रिदशेष्वपि । (वा. रा.)

उपलमिश्रा एव तण्डुलाः आपणेषु विक्रीयन्ते ।

विधानसभासु प्रतिनिधयः वाक्कलहं कुर्वन्ति ।

अद्य अनावृष्ट्या दुर्भिक्षभयं उत्पश्यन्ति राजकीयाः ।

अलाभभीताश्च जनाः लब्धं लब्धं द्रव्यं संचिन्वन्ति ।

गते मासे देवालयेषु कृत्तिकोत्सवः प्राचलत् ।

लक्ष्मणाग्रजः जनकसुतया सह पितुराज्ञया वनं गतः ।

ताम्रपात्रस्थितं क्षीरं विषं भवति ।

तुंबुरुनारदौ सङ्गीतनिपुणौ ।

सङ्गीतविद्याम् (?) 

कुन्तीपुत्रः कर्णः दानवीरः।

अर्धमार्गे वृष्टिभयात् अहं प्रतिनिवृत्तः।

अनृतवचनं अविश्वासाय कल्पते। (காரணமாகிறது.)

सीताहरणं महान् अधर्मः इति मारुतिः रावणं अबोधयत्।

अर्धनारिकेलं शाकाय सज्जीकुरु।

पार्वती प्रेम्णा शङ्करस्य शरीरार्धं जहार।

கோடிட்ட பதங்கள் तत्पुरुषसमासத்தின் உதாரணங்கள். விக்ரக வாக்யங்கள் தரப்பட்டுள்ளன. கவனித்துப் படியுங்கள். விதிகளுடன் ஒப்பிட்டுப்பாருங்கள்.

कांग्रेसं आश्रिताः। अन्यकक्ष्यां आश्रिताः। सूचिकया वेधः सूचिकावेधः+तं सूचिकावेधं। क्षणं दुःखं। वयः अतीताः। वाल्मीकिना विरचितं। रामेण समः। उपलैः मिश्राः। विधानाय सभाः विधानसभाः+तासु विधानसभासु। वाचा कलहः वाक्कलहः +तं। न आवृष्टिः अनावृष्टिः+तया। दुर्भिक्षात् भयं दुर्भिक्षभयं +तत्। न लाभः अलाभः, अलाभेन भीताः अलाभभीताः। देवानां आलयाः देवालयाः+तेषु। कृत्तिकायाः उत्सवः। लक्ष्मणस्य अग्रजः। जनकस्य सुता जनकसुता+तया। ताम्रपात्रे स्थितं ताम्रपात्रस्थितं। संगीते निपुणौ। विज्ञाने कुशलः। दाने वीरः। अर्धं मार्गस्य अर्धमार्गः+तस्मिन्। वृष्टेः भयं वृष्टिभयं तस्मात्। न ऋतं अनृतं, अनृतस्य वचनं अनृतवचनं। न विश्वासः अविश्वासः तस्मै। सीतायाः हरणं सीताहरणं। न धर्मः। अर्धं नारिकेलस्य अर्धनारिकेलः तं। शरीरस्य अर्धः शरीरार्धः तं।

கேள்விகள் :

1 दुर्भिक्षभयं என்ற ஸமாஸ பதத்துடன் 'तत्' சேர்க்கப் பட்டிருப்பது ஏன் ?

2 ताम्रपात्रस्थितं என்ற ஸமாஸ பதத்துடன் तत् ஏன் சேர்க்கப்படவில்லை?

3 अर्धमार्गः अर्धनारिकेलः शरीरार्धः என்ற பதங்களில் ஸமாஸ வேற்றுமைகள் ஏற்பட்டிருப்பது எதனால்? பொருளில் சூக்ஷ்மமான வேறுபாடுண்டு. அது என்ன?

கடினப்பதப்பொருள்: अद्यत्वे இன்றளவில். विपक्षः எதிர்கட்சி. सूचिकावेधः ஊசி குத்துதல், இஞ்செக்ஷன். त्रिदशाः தேவர்கள். उपलः கல். उत्पश्यन्ति எதிர்பார்க்கிறார்கள். संश्लिन्वन्ति சேமிக்கிறார்கள்.

### अष्टनवतितमः पाठः—பாடம் 98

# संक्षिप्तं अभिज्ञानशाकुन्तलम्—१०

### षष्ठं दृश्यम् (अनुवर्तते)

राजा—(शकुन्तलां उत्थानात् वारयन्) अलमलं आयासेन। ते गात्राणि गुरुपरितापानि। तानि आयासं नार्हन्ति।

अनसूया—इतः उपविशतु वयस्यः। (राजा उपविशति। शकुन्तला सलज्जा तिष्ठति)

प्रियंवदा—राजन्! युवयोः द्वयोरपि अन्योन्यं अनुरागः प्रत्यक्षः। तथापि सखीस्नेहः मां चोदयति—राज्ञा जनस्य आर्तिहरेण भवितव्यम्। एष वो धर्मः। इयं आवयोः प्रियसखी त्वां उद्दिश्य इमां अवस्थां प्राप्ता। अस्या जीवितं रक्षणीयम्।

राजा—भद्रे, ममापि साधारणोऽयं प्रणयः। सर्वथा अनुगृहीतः अस्मि। इदं हृदयं अनन्यपरायणम्।

अनसूया—वयस्य! राजानो बहुवल्लभाः श्रूयन्ते। आवयोः सखी बन्धुभिः शोच्या न भवेत्। तथा निर्वाहय।

राजा—भद्रे! किं बहुना। मम परिग्रहा बहवः। तथापि मे कुलस्य द्वे प्रतिष्ठे। एका इयं उर्वी, इयं च युवयोः सखी।

सख्यौ—निर्वृते स्वः।

---

वारयन् தடுப்பவராக. आयासः உடல் வருத்தம். गात्रं உடலுறுப்பு. गुरुपरितापं அதிக வேதனையுள்ளது. चोदयति தூண்டுகிறது. चोदयति चोदयतः चोदयन्ति। आर्तिहरः

வேதனையைப் போக்குபவன். राज्ञा …भवितव्यम् அரசர் மக்களின் வேதனையைப் போக்குபவராக இருக்கவேண்டும். ममापि … … प्रणयः எனக்கும் பொதுவான அன்பு வேண்டுகோள் (நானும் அவ்விதமே கோருகிறேன் எனப்பொருள்.) अनन्यपरायणं வேறொருவரிடத்தில் ஈடுபாடற்றது. (परं + अयनं, परायणं முக்கிய நோக்கு, ஈடுபாடு. न अन्यस्मिन् परायणं) बहुवल्लभाः அனேக மனைவியர் (நாயகிகள்) உள்ளவர். (बह्व्यः वल्लभाः यस्य) शोच्या வருந்தத்தக்கவள். निर्वाहय பொறுப்புடன் நடத்திக்கொடுப்பீர். परिग्रहः கைத்தலத்தால் பற்றிய மனைவி. प्रतिष्ठा ஆதாரம். उर्वी பூமி, அரசு. निर्वृता நிம்மதியுற்றவள்.

பயிற்சிகள் :

1. இந்தப்பாடத்தைத் தமிழில் மொழி பெயர்க்கவும்.

2. आयासं, आर्तिहरेण, राज्ञा, परिग्रहाः, प्रतिष्ठे இவைகள் அமைந்த விபக்தியின் மற்ற இரு உருவங்களைத் தருக.

## एकोनशततमः पाठः —பாடம் 99

## புல்லிங்கமும் ஸ்திரீலிங்கமும்

ஆண்பாலைக் குறிப்பது புல்லிங்கம். பெண்பாலைக் குறிப்பது ஸ்திரீலிங்கம். ஆணும் பெண்ணுமாகக் குறிப்பிட முடியாதவற்றைக் குறிப்பிடுவது நபும்ஸகலிங்கம். இது பொதுவிதி. மிகச்சில தனிப்பட்ட சொற்கள் புல்லிங்கமாயினும் பும்ஸகமாயினும் பெண்பாலைக் குறிக்கும். உதாரணம். दाराः மனைவி இந்தச் சொல் புல்லிங்கம். ஆனால் எப்போதும் பன்மையிலே வரும். பன்மையில் கூறினாலும் ஒரு மனைவியையும் குறிக்கும். இரு மனைவிகளையும் பல மனைவிகளையும் दाराः என்றே குறிப்பிடலாம். அதே மாதிரி कलत्रं மனைவி, இது நபும்ஸகலிங்கச்சொல். ஆனால் மூன்று வசனங்களிலும் வரும். பொதுவாக ஆண்பால் பெண்பால் இரண்டுமுள்ள சில சொற்களை இங்கு கவனிப்போம். இவைகளில் சில பெண்பால் சொற்கள் மாறுபட்ட அல்லது தனிப்பட்ட பொருள் கொண்டதையும் காண்போம். अजः ஆண் ஆடு, अजा பெண் ஆடு. மாறுபட்ட பொருளுள்ளதை ஆங்காங்கு விவரிப்போம்.

ஆடு अजः अजा          குதிரை अश्वः अश्वा

மற்றொருவன் अन्यः अन्या

" நெடும்புனலுள் வெல்லும் முதலை அடும்புனலின்
நீங்கின் அதனைப் பிற " —திருக்குறள்





REGD. TRADE MARK

பளயகாட்ஸ்

# சங்கு மார்க்

## லுங்கிகள்

### கைக்குட்டைகள்



மதறாஸ் பளயகாட் கம்பெனி(பி)லிட்.
88 அரண்மனைக்காரத் தெரு. சென்னை-600 001.

*With the best compliments of:*

# SANGU MARK

**Handloom Lungies & Kerchiefs**



Manufacturers:

**THE MADRAS PALAYAKAT CO. (P) LTD.,**

Phone: **23040**

88, Armenian St., MADRAS-600 001.

R. N. 30478/77—SAMSKRITA SRI—22-2-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



Printed by S. Naganathan, at Theni Printers, Trichy. Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society. (Regd.) Trichy Branch: 9. Single Mall Street. Tiruchirapalli-620 002.